॥ यमाष्टकं नरसिंहपुराणे ॥

श्रीव्यास उवाच --
स्वपुरुषमभिवीक्ष्य पाशहस्तं वदति यमः किल तस्य कर्णमूले ।
परिहर मधुसूदनप्रपन्नान् प्रभुरहमन्यनृणां न वैष्णवानाम् ॥ १॥

अहममरगणार्चितेन धात्रा यम इति लोकहिताहिते नियुक्तः ।
हरिगुरुविमुखान् प्रशास्मि मर्त्यान् हरिचरणप्रणतान्नमस्करोमि ॥ २॥

सुगतिमभिलषामि वासुदेवादहमपि भागवते स्थितान्तरात्मा ।
मधुवधवशगोऽस्मि न स्वतन्त्रः प्रभवति संयमने ममापि कृष्णः ॥ ३॥

भगवति विमुखस्य नास्ति सिद्धिर्विषममृतं भवतीति नेदमस्ति ।
वर्षशतमपीह पच्यमानं व्रजति न काञ्चनतामयः कदाचित् ॥ ४॥

नहि शशिकलुषच्छविः कदाचिद्विरमति नो रवितामुपैति चन्द्रः ।
भगवति च हरावनन्यचेता भृशमलिनोऽपि विराजते मनुष्यः ॥ ५॥

महदपि सुविचार्य लोकतत्त्वं भगवदुपास्तिमृते न सिद्धिरस्ति ।
सुरगुरुसुदृढप्रसाददौ तौ हरिचरणौ स्मरतापवर्गहेतोः ॥ ६॥

शुभमिदमुपलभ्य मानुषत्वं सुकृतशतेन वृथेन्द्रियार्थहेतोः ।
रमयति कुरुते न मोक्षमार्गं दहयति चन्दनमाशु भस्महेतोः ॥ ७॥

मुकुलितकरकुड्मलैः सुरेन्द्रैः सततनमस्कृतपादपङ्कजो यः ।
अविहतगतये सनातनाय जगति जनिं हरते नमोऽग्रजाय ॥ ८॥

यमाष्टकमिदं पुण्यं पठते यः शृणोति वा ।
मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ॥ ९॥

इतीदमुक्तं यमवाक्यमुत्तमं मयाधुना ते हरिभक्तिवर्द्धनम् ।
पुनः प्रवक्ष्यामि पुरातनीं कथां भृगोस्तु पौत्रेण च या पुरा कृता
॥ १०॥

इति श्रीनरसिंहपुराणे यमाष्टकनाम नवमोऽध्यायः ॥ ९॥